**एस्.जगन्नाथः। मैसूरु**
jagannathas1956@gmail.com



३
२४.२.२०२०

दशस्वपि दिक्षु कटाक्षं पातयन्ती संस्कृतपत्रिका।

## संस्कृतभाषाक्षेत्रे परभाषारूपाणि क्षेत्रियाणि सस्यानि(Weeds )।

''नगेयु बरुतिदे एनगे नगेयु बरुतिदे(हासो मामुप सर्पति, हासो मामुपसर्पति)'' इत्यारभमाणा काचिद् गेया रचना कन्नडभाषया कृता पुरन्दरदासेन।

केनापि ''संस्कृतं मृता भाषा'' इत्युक्ते यद् गर्जन्ति संस्कृतज्ञाः, तच्छ्रुतवतो गेयेयं रचना मम स्मृतिपथं याति। 'संस्कृतं मृतभाषा इति सतिरस्कारं वदतां नाम्न्येव संस्कृतशब्दवत्त्वं वर्तत' इति ये संस्कृतस्यामृतत्वं प्रतिजिज्ञापयिषमाणा जना 'युक्तिं (?)' दर्शयन्ति तद् दर्शनमनुभवता मया हसितव्यं वा रुदितव्यं वा न ज्ञायते।

कन्नडग्रन्थरचयितॄणां नामानि प्रायेण संस्कृतशब्दैः कृतानि। स्यादेतत्। एतेन किंलक्षणं साक्ष्यं कस्य प्रतिपाद्यांशस्योप लब्धम्?। तेषां सर्वेषां संस्कृतज्ञानमस्तीति वा ? तैः सर्वैः संस्कृते-तरया भाषया कृतग्रन्थैरपराद्धमिति वा ?कन्नडाभिमानो यत् तैर्दर्श्यते तत् तेषां संस्कृतद्वेषविषस्य वमने प्रमाणमिति वा ?

'अय्यप्प'इति कस्यचन जनस्य नामेत्यभ्यूह्यताम्। ''तस्मिन्नाम्नि संस्कृतस्य गन्धोऽपि नास्ति। तस्मात् स यदि संस्कृतं द्वेष्टि, द्वेष्टु ;' संस्कृतस्य शवोऽपि संप्रति न दृश्यते' इति वा कत्थताम्। वयं न प्रतिभटयामः। किन्तु, यस्य जनस्य नाम्नि संस्कृतशब्दोऽस्ति स जनः-संस्कृतं मृतम्-इति कथयन्निषिध्यते'' इति गदनं हास्यास्पदम्।

अध्येतद्विषयम् अपराऽपि बालिशास्वाद्या युक्तिः श्रूयताम्। ''रामायणमहाभारतपुराणसाहित्यानि कन्नडभाषया अनूदितानि। तस्मात् संस्कृतभाषा मृतभाषा इति वदन्तः परास्ताः।''हंहो! मेसेपोटेमियादेशे समुपलब्धानां हिट्टैट्लेख नानाम् इङ्गलीष् प्रभृतिषु भाषासु विमर्शास्तद्विषयकाः संशोधन ग्रन्था अपि रचिताः।एतेन किं विवक्षन्त्येते संस्कृतस्यामृतत्वं घोषयन्तो बुद्धिमन्तः? किम् हिट्टैट्भाषा अमृतभाषेति ? अहो मेधावैभवमेतेषाम्!

संस्कृतग्रन्थानां पीठिकासु प्रायेण संस्कृतं न दृश्यते। संस्कृतज्ञानां परस्परेण संकथाप्रसंगेषु संस्कृतं न श्रूयते। संस्कृतसं मेलनेषु- विशिष्य, 'स्याँन्स्क्रीट् कान्फेरेन्स्' इत्यादिषु संस्कृतं स्वागतभाषण-वन्दनार्पणादिषु कथञ्चित् त्रिचतुरान् सुबन्तान् शब्दान् तिङन्तांश्च शब्दान् अवलम्ब्य श्वसित्युच्छ्वसिति च।

अवधानकलाप्रदर्शनार्थासु सभासु शास्त्रार्थगोष्ठीषु च यच्छ्रूयते संस्कृतं, तदतीव प्रमोदाय मे। अवधानकलासु संस्कृत भाषाया अपरिचितानि पदानि अपरिचितान्यर्थसौन्दर्याणि परिचितानि भवन्ति। शास्त्रार्थगोष्ठीषु पुनः शास्त्रीया वाक्यरीतयः कर्णरसायनमाचरन्ति।

संस्कृतभाषणमधुना जागरितावस्थां प्राप्नुवत् मन्दं मन्दं जृम्भणमिव कुर्वाणं कर्णपथातिथीक्रियते। संस्कृतसंभाषणशिबिरेषु संस्कृतभाषया संकथाः,संस्कृतसम्मेलनादिषु (केषुचन न पुनः सर्वेषु) संस्कृतेनैव कार्यक्रमजातस्यानुष्ठानमित्यादिकम्।

संस्कृतग्रन्थानां सृष्टिः, तत्प्रतिकृतिलेखनं संस्कृतेन पाठनं शास्त्रार्थचर्चा चेत्यादिकं नाभिप्रेतमत्र, यत् कदापि न स्थगितम्। लोके व्यवहारार्थं व्याहारिकशब्दभूयिष्ठस्य संस्कृतव्याहारस्य तुण्डा-न्निःसारणमभिप्रेतमत्र।

संस्कृतविभागेषु पि एच्.डी पदव्यै समर्प्यमाणेषु संशोधन प्रबन्धेषु संस्कृतस्याधिकतरम् उपयोगोऽथ च, संस्कृतभाषयैव ग्रन्थरचना संस्कृतपत्रिकाणां प्रचालनं चेति त्रीणि कर्माण्यत्रानुदा हरणीयानि तेषां लेखनस्वरूपत्वात् संभाषणस्वरूपत्वाभावाच्च।

संस्कृतज्ञानां नैष्ठुर्याभावात् केचन संस्कृतज्ञानलेशशून्याः संस्कृतज्ञानां परिषदि प्रवेशं प्राप्तवन्तः सन्तः भिन्नां दृष्टिं प्रसारयन्तः 'संस्कृतं वस्तुतो मृतमेव' इति वदन्तः 'कृतबहुप्रयत्ना अपि वयं संस्कृतं शिक्षितुं नाशक्नुम' इति अन्यं युक्त्याभासं दिदर्शयिषन्ते।

संस्कृतं न मृतमिति दृढो विश्वासो मे। परन्त्वत्र ये हेत्वाभासा युक्त्युपन्यासत्वेन कैश्चिदुपस्थाप्यन्ते तान् नाद्रियेऽहम्। वास्तविक्यो दृढाश्च युक्तयोऽत्र लभ्यमाना अपि संस्कृतज्ञैस्तासु किमर्थं नादरो दर्श्यत इति नाहं वेद्मि।

संस्कृतमिति शब्दश्रवणानन्तरमस्माकं मनोमन्दिरे संस्कृत शब्दाः स्वानि रूपाणि दर्शयेयुः। अर्थात्-तिङन्ताः, सुबन्ताः, कृदन्ताः, अव्ययानि, व्यावहारिकाणि पदानि, प्राचीनाभिः कृतिभिः सार्धं नवीना रचनाः- इत्येतदादिकं यत् सांस्कृतं स्वरूपं-तदस्माकं पुरस्तान्नृत्यात्। यत्रैतदनुकूलाः परिस्थितयः, तस्य प्रचारं संस्कृतज्ञसमाजः क्रियाच्चेत्याशीर्मे।

इङ्ग्लीष्भाषाया यदधुना विश्वस्मिन् विराजमानता तत्र किं कारणमित्यग्रे विवक्षामि। संस्कृतक्षेत्रे परासां भाषाणां रोहणं, संस्कृतसौधे च परासां भाषाणां ताण्डवं न भूयात्।

## भारतस्य राष्ट्रभाषा हिन्दीति किं दयानन्द उवाच ?

''आर्यसमाजस्य संस्थापकः स्वामी दयानन्दसरस्वती 'भारतस्य राष्ट्रभाषा हिन्दी' इत्युवाच''इति येयम् उदन्तकथा सर्वत्र प्रसारिता हिन्दीभक्तैस्सा विचार्या।

यो दयानन्दो ''वेदः सर्वैरपि भारतीयैरध्येतव्य'' इत्युवाच, यः पाणिनीयव्याकरणपाण्डित्ये प्रचण्डः, यश्च पञ्च विंशतिवर्षाणि यावद् संस्कृतभाषयैव समभाषत, स ''यदि काऽपि राष्ट्रभाषा भवितुमर्हति भारतस्य, सा हिन्दी न पुनः संस्कृतम्'' इत्यवोचतेति कल्पना दुष्करा कर्तुम्।

अन्यच्च- सत्यार्थप्रकाशे स कांश्चन ग्रन्थान् अनार्षान् अभिधत्ते, तेषां पठनं निषेधति च।तेन निषिद्धानां ग्रन्थानां नामसु तुलसीरामायणस्य नामान्यतमत्! एवं स्थितेऽपि हिन्दी-भक्ता विषयमेतं निगूह्य 'हिन्दी राष्ट्रभाषेति दयानन्देन घुष्टम्' इति तच्चरित्रे कल्पयन्ति।

''दयानन्देन 'भारतस्य राष्ट्रभाषा हिन्दी' इत्युक्तम्'' इत्यारभटीमारभमाणाः किमर्थं 'तुलसीरामायणस्य पठनं दयानन्देन निषेधितम्' इत्येतत् सत्यं निगूहन्ति?

सुधाकरचतुर्वेदिना कन्नडभाषया प्रणीते 'दयानन्द सरस्वतिगळ जीवनचरित्रे' इत्यत्र वर्णितोऽयं प्रसंगः-

एकदा दयानन्दः सभायां भाषमाणः- ''मांसं नैव खादनीयम्'' इत्युवाच।सभासदां मध्ये कैश्चित् 'स्वामिन् ! सत्यार्थप्रकाशे भवतैवोक्तं मासं खादनीयमिति।परन्त्वधुना किमर्थं मासाहारं निषेधन् भाषते' इति पृष्टम्।'मांसं खादनीयमिति मया न कदाऽप्युक्तम्' इति दयानन्देनोक्ते तैः सत्यार्थप्रकाशस्य तत् स्थलं प्रदर्शितं यत्र 'मांसाहारः करणीय' इति स्पष्टमेव मुद्रितमासीत्।झटित्यवगतवान् दयानन्दः किमभूदिति।केचन धूर्ताः कथञ्चिदार्यसमाजं प्रविष्टवन्तो ये दयानन्दोक्तिषु न विश्वसन्ति स्म।तैश्च सत्यार्थप्रकाशस्य पुटेषु-दयनानन्दो यथा नाजानत्तथा-आर्यसमाजनियमविरुद्धा विषया योजिताः।ततो दयानन्दः सत्यार्थप्रकाशस्य प्रथमं मुद्रणं न प्रमाणमिति घोषया-मास। तस्य द्वितीये मुद्रणे सावधानं सर्वाणि पुटानि संस्कृतवान्।

''-'भारतस्य राष्ट्रभाषा हिन्दी भवितुमर्हति' इति दयानन्देनोक्म्'' इति या कथा, सा प्रायेण ''दयानन्देन मनुष्याणां मासाहारकृत्त्वं समर्थितम्'' इत्येतत्कथासोदरी।सत्यप्यस्याः सत्यत्वे 'महान्तोऽपि प्रमाद्यन्ति' इत्येव वक्तव्यम्।

## केषाञ्चन (न तु सर्वेषां) संस्कृतपण्डितानां दुरभ्यासः।

केषाञ्चन (न तु सर्वेषां) औत्तराहाणां पण्डितानां कश्चन दुरभ्यासः प्रायेण तैः कृतेषु संस्कृतग्रन्थ-हिन्द्यनुवादानां पीठिकासु गोचरीभवति। "अयं ग्रन्थो राष्ट्रभाषाहिन्द्याम् मयाऽनूदितः " ; " राष्ट्रभाषाहिन्द्याम् अमुं ग्रन्थमनुवदितुम् एष महाशयः सूचितवान्'' इत्यर्थकानां वाक्यानां सन्निवेश एव स दुरभ्यासः। 'हिन्द्याम्' इत्येतवता अलम्।किमर्थं 'राष्ट्रभाषा' इत्यस्य पुच्छस्य हिन्दीशब्दपूर्वं योजनम् ?

दुरभ्यासोऽयम् हिन्दीतरभाषाणामपमाननाय रूढमूले-त्यत्र न कोपि संशयः।"यौष्माकीणा भाषा न केवलं 'हिन्दीतराः', अपि तु 'अराष्ट्रभाषा' अपि'' इत्यवहेलनाकरणमेवास्य दुरभ्यासस्य निदानम्।

यदि कस्मिंश्चन कन्नडानुवादग्रन्थे "राष्ट्रभाषकन्नडेन ग्रन्थोऽयमनूदित'' इति वयं लिखामः किमेते पण्डिताः सहन्त एतत् ? इत ऊर्ध्वं त्यज्यासुस्ते पण्डिता हिन्दीतरभाषाद्वेषम्।

मनुष्या न केवलं हिन्दीभाषिणः परन्तु कन्नडादि भाषिणोऽपि मनुष्या एवेति ते ज्ञायासुः।स्वभाषाप्रेम सर्वेषां वर्तत एव। कन्नडादिभाषा येषां स्वीया भाषास्तेषामपि स्वभाषाभि मान द्योतकं साहित्यं सृष्टमेवेति यथा ते जानन्ति तथा सर्वेषा क्षेमम्।इत ऊर्ध्वं ते "राष्ट्रभाषाहिन्द्यामनुवाद'' इत्यलिखन्तः, केवलं "हिन्द्यामनुवाद'' इति लिख्यासुः।

हिन्दीद्वेषो न श्रेयस इति ते यथा वदन्ति तथा वयमपि वदामः कन्नडादिद्वेषो न विवेकदर्शीति।

इङ्ग्लीष्भाषा विश्वभाषेति सर्वैरङ्गीकृतम्।तथाऽपि इङ्ग्लीष्भाषाप्रस्तावे "विश्वभाषेङ्ग्लीष्''"विश्वभाषेङ्ग्लीष्'' इति केनापि न लिख्यते।हिन्दी राष्ट्रभाषेत्यङ्गीकारः केवलं हिन्दी भक्तानां, न पुनः सर्वेषां भारतीयानाम्।तथापि संस्कृतपण्डितैः "राष्ट्रभाषाहिन्द्यां ग्रन्थोऽयं मयाऽनूदित'' इति किमर्थं लिख्यताम्? शास्त्रे गरिमा लोके लघिमा। (नवीन आभाणको मया सृष्टः।)

## त्रिभाषाविधिः

भारते सर्वत्र राज्येषु तिस्रो भाषा अधिकृता इति नियमो विधेयः-१.राज्यभाषाः(स्टेट् लाङ्ग्वेजस्) कन्नडं मलयाळम् इत्यादिकाः २.राष्ट्रभाषात्वेन संस्कृतम्।३.विश्वभाषात्वेन इङ्ग्लीष्। कस्या अपि भाषायाः 'लोकल् लाङ्ग्वेज्' इति अथवा 'रीजिनल् लाङ्ग्वेज्' इत्यभिधानस्य करणेन अपमानना नैव रचनीया।

नागल्याण्ड्राज्ये परिस्थितिः किञ्चिदिव भिन्ना।तत्र तु इङ्ग्लीष् एव स्टेट् लाङ्ग्वेज् अस्ति।तत्र भाषाविषयिका काऽपि वञ्चना कृता वा,न वा-नाहं जाने।तद्विषयकं चरित्रमन्विष्य लेखं कमपि प्रकाशयिष्यामि।त्रिभाषाविधौ सर्वत्र भारतेऽनुष्ठिते नागल्याण्ड्राज्यमपवादो भवति यत्र द्विभाषानीतिरनुष्ठेया। एतत् कथमपि नाङ्गीकार्यम्।

एवं रचिते त्रिभाषानियमे सर्वा अपि भाषाः स्मयन्ते।